

श्री शनिदेव कृत

# श्री गणेश कवचम्।

(विघ्न, भय, रोग, शोक, भूत-प्रेत बाधा निवारक, एवं सर्वत्र विजय प्रदायक)

संसार मोहन स्यास्य कवचस्य प्रजापतिः।
ऋषिश्छन्दश्च बृहती देवो लम्बोदरः स्वयम्॥
धर्मार्थ काम मोक्षेषु विनियोगः प्रकीर्तितः।
सर्वेषां कवचानां च सार भूत मिदं मुने॥
ॐ गं हुं श्री गणेशाय स्वाहा में पातु मस्तकम्॥
द्वात्रिंशदक्षरो मन्त्रो ललाटों में सदा वतु।
ॐ ह्री ह्रीं क्लीं श्रड्रीं गमिति वै सततं पातु लोचनम्।
तालुकं पातु विघ्नेशः सततं धरणी तले॥
ॐ ह्री श्रीं क्लीमिति परं सततं पातु नासिकाम्।
ॐ गौं गं शूर्पकर्णाय स्वाहा पात्व धरं मम॥
दन्तांश्च तालुकां जिह्वां पातु मे षोड़शाक्षरः।
ॐ लं श्रीं लम्बोदश येति स्वाहा गण्डं सदावतु॥
ॐ क्लीं ह्रीं विघ्न नाशाय स्वाहा कर्णं सदावतु।

# श्रीमहा गणपति चतुरावृत्तितर्पणम्

## SRI MAHAGANAPATHY CHATHURAVRITHI THARPANAM






**श्री ज्ञान प्रकाशन**

७, फ्लॉट नं, ३७७, ३०वीं गली, सेक्टर ६,
के. के. नगर, चेन्नै - ३०० ०७८.
फोन : २४७४०००१

2008 - 12.00

सकुटुम्बानां क्षेमस्थैर्य वीर्य विजय-आयुरारोग्य-ऐश्वर्याणाम् अभिवृद्ध्यर्थं धर्मार्थकाममोक्ष चतुर्विध - फलपुरुषार्थ-सिद्ध्यर्थं सकलसौभाग्य-प्राप्त्यर्थं श्रीमहागणपति - प्रसाद - सिद्ध्यर्थं सर्वविघ्ननिवारणार्थं चतुरावृत्तितर्पणं करिष्ये ॥ (इति संकल्प्य)

घटे उदकम् आदाय - उदके दिव्य - परिमलगन्धरोजापुष्पोदकं इत्यादिवासनाद्रव्यैः संमिश्रय । जले पुरतः चतुरश्र-मण्डलं परिकल्प्य । शिरसः उपरि बद्धाञ्जलिः—

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥

इति जपन् तीर्थं हस्ततलेन आच्छाद्य तत्र मण्डले—

आवाहयामि त्वां देवि तर्पणायेह सुन्दरि ।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ॥

इति गङ्गां प्रार्थ्य ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इत्युच्चार्य क्रों इत्यङ्कुशमुद्रया गङ्गाम् आकाशादावाह्य तर्जनीं तीर्थे निमज्ज्य वम् इति अमृत-बीजेन सप्तवारम् अभिमन्त्र्य तस्मात् पात्रात् तर्जनीम् उद्धृत्य उद्धरण्या जलं गृहीत्वा प्रथमकलशतीर्थे निक्षिप्य, तृतीयपात्रे कुङ्कुममिश्रोदकेन चतुरश्र-अष्टदल - षट्कोण - त्रिकोणात्मकं महागणपतियन्त्रं विलिख्य तदुपरि गणपतिबिम्बं वा यन्त्रं वा श्रीचक्रं वा स्थाप्य - बिम्बे वा चक्रे वा गणपतिम् आवाह्य तर्पणं कुर्यात्—

## ॥ श्रीगणपतिन्यासः ॥

ओम् अस्य श्री महागणपति-महामन्त्रस्य (शिरसि) गणक ऋषिः ।

(नासापुटे) निचृत् गायत्री छन्दः । (हृदये) श्रीमहागणपतिर्देवता ।

ओं बीजं (नाभौ) स्वाहा शक्तिः (पादसंघट्टने) ग्लौं कीलकं (गुह्ये)

श्रीमहागणपति-प्रसाद-सिद्ध्यर्थे तर्पणे विनियोगः ॥

| करन्यासः | | अङ्गन्यासः |
|---|---|---|
| १. गां अङ्गुष्ठाभ्यां | नमः | गां हृदयाय नमः |
| २. गीं तर्जनीभ्यां | ,, | गीं शिरसे स्वाहा |
| ३. गूं मध्यमाभ्यां | ,, | गूं शिखायै वषट् |
| ४. गैं अनामिकाभ्यां | ,, | गैं कवचाय हुम् |
| ५. गौं कनिष्ठिकाभ्यां | ,, | गौं नेत्रत्रयाय वौषट् |
| ६. गः करतलकरपृष्ठाभ्यां | ,, | गः अस्त्राय फट् |

ओं भूर्भुवस्सुवरोम् इति दिग्बन्धः ।

ध्यानम्· बीजापूर-गदेक्षु-कार्मुकरुजा चक्राब्जपाशोत्पल-

व्रीह्यग्र-स्वविषाण-रत्नकलश-प्रोद्यत्कराम्बोरुहः ।

ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया

विश्वोत्पत्तिविपत्ति-संस्थितिकरो विघ्नेश इष्टार्थदः ॥

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् । महागणपतये नमः अर्घ्यं त्रिः समर्पयामि ।

अष्टाविंशतिवर्णात्ममन्त्रराजविजृम्भितम् ।
मन्त्रशास्त्रमहोदन्वत्समुद्यतकलानिधिम् ॥

चतुर्दशकसंयुक्त-चतुर्युक्तचतुश्शतम् ।
चतुरावृत्तिसंतृप्तिप्रीत्याभीष्टप्रदायकम् ॥

चन्द्रचन्दनकाश्मीरकस्तूरीजलतर्पितम् ।
वल्लभाश्लिष्टवामाङ्गमेकादशकरान्वितम् ॥

रत्नकुम्भाढ्यशुण्डाग्रं बीजापूरगदाधरम् ।
इक्षुचापधरं शूलचक्रसरोजहस्तकम् ॥

पाशोत्पलान्वितं शालीमञ्जरीस्वविषाणकम् ।
जपापुष्पतिरस्कारि रक्तकान्तिसमुज्ज्वलम् ॥

पञ्चावरणचक्रेशं षडङ्गपरिवारितम् ।
परौघपूजनातुष्टं दिव्यौघादिनिषेवितम् ॥

श्रीश्रीपतिसंतुष्टं गिरिजातत्पतिप्रियम् ।
रतिमन्मथसंप्रीतं महीवराहपूजितम् ॥

ऋद्ध्यामोदप्रपूजाकं समृद्धितत्पति प्रियम् ।
कान्तिसुमुखसुप्रीतं मदनावतिदुर्मुखम् ॥

मदद्रवाविघ्नपूज्यं द्राविणीविघ्नकर्तृकम् ।
वसुधाराशङ्खपूज्यं वसुमतिकपद्मकम् ॥

ब्राह्मीप्रियमीश्वरीशं कौमारीसेवितांघ्रिकम् ।
इन्द्राणीपूजितश्रीकं चामुण्डाश्रितपादुकम् ॥

महालक्ष्मीमहामातृसं पूजितपदद्वयम् ।
ऐरावतादिवज्रादि देवेन्द्रादिप्रपूजितम् ॥

पञ्चावरणपूजोद्यत्कारुण्याकुलमानसम् ।
पञ्चावृतिनमस्याक-भक्तवाञ्च्छाप्रपूरणम् ॥

पञ्चावृत्तिनमस्यायामणिमादिप्रकाशकम् ।
महागजाननं देवं संस्मरेत्स्थिरमानसः ॥

इत्थं महागणपतिं ध्यात्वा देवं पञ्चोपचारैः संपूजयेत् ॥—यथा

## (पञ्चोपचार पूजा)

लं पृथिव्यात्मने गन्धं कल्पयामि नमः
हं आकाशात्मने पुष्पाणि समर्पयामि नमः
यं वाय्वात्मने धूपम् आघ्रापयामि नमः
रं वह्न्यात्मने दीपं दर्शयामि नमः
वं अमृतात्मने अमृतोपहार-महानैवेद्यं
कल्पयामि नमः

सं सर्वात्मने ताम्बूलादि समस्तराजोपचारदेवोपचारान् कल्पयामि नमः

# तर्पणम्

१. **मूलमन्त्र :** सिद्धलक्ष्मी-समेत-श्रीमहागणपतिं तर्पयामि
(इति द्वादशवारं तर्पणं कुर्यात्)—--, १२

२. श्रीं ह्रीं क्लीं ओं स्वाहा। महागणपतिं तर्पयामि (चतुर्वारं) ४

३. (मूलं) ,, ,, ,, ४

४. ,, श्रीं ,, ,, ,, ४

५. (मूलं) ,, ,, ,, ४

६. ,, ह्रीं ,, ,, ,, ४

७. ,, (मूलं) ,, ,, ,, ४

८. ,, क्लीं ,, ,, ,, ४

९. (मूलं) ,, ,, ,, ४

१०. ,, ग्लौं ,, ,, ,, ४

११. (मूलं) ,, ,, ,, ४

१२ ,, गं ,, ,, ,, ४

१३. (मूलं) ,, ,, ,, ४

१४. गं ,, ,, ,, ४

१५. (मूलं) ,, ,, ,, ४

१६. ,, णं ,, ,, ,, ४.

१७. (मूलं) ,, ,, ,, ४

१८. ,, पं ,, ,, ,, ४

१९. (मूलं) ,, ,, ,, ४

२०. श्रीं ह्रीं क्लीं तं स्वाहा । महागणपतिं तर्पयामि । ४

| | | | | | | |
|---|---|---|---|---|---|---|
| २१. | | (मूळं) | ,, | ,, | ,, | ४ |
| २२. | ,, | यें | | ,, | | ४ |
| २३. | | (मूलं) | ,, | ,, | ,, | ४ |
| २४. | ,, | वं | | ,, | | ४ |
| २५. | | (मूलं) | ,, | ,, | ,, | ४ |
| २६. | ,, | रं | | ,, | | ४ |
| २७. | | (मूलं) | ,, | ,, | ,, | ४ |
| २८. | ,, | वं | | ,, | | ४ |
| २९. | | (मूलं) | ,, | ,, | ,, | ४ |
| ३०. | ,, | रं | | ,, | | ४ |
| ३१. | | (मूळं) | ,, | ,, | ,, | ४ |
| ३२. | | दं | | ,, | | ४ |
| ३३. | ,, | (मूलं) | ,, | ,, | ,, | ४ |
| ३४. | ,, | सं | | ,, | | ४ |
| ३५ | | (मूलं) | ,, | ,, | ,, | ४ |
| ३६. | ,, | र्वं | | ,, | | ४ |
| ३७. | | (मूलं) | ,, | ,, | ,, | ४ |
| ३८. | ,, | जं | | ,, | | ४ |
| ३९. | | (मूलं) | ,, | ,, | ,, | ४ |
| ४०. | ,, | नं | | ,, | | ४ |

| | | | | | | |
|---|---|---|---|---|---|---|
| ४१. | | (मूलं) स्वाहा । | महागणपतिं तर्पयामि । | | | ४ |
| ४२. | श्रीं ह्रीं क्लीं मे | | ,, | ,, | ,, | ४ |
| ४३. | | (मूलं) | | | | ४ |
| ४४. | ,, | वं | | | | ४ |
| ४५. | | (मूलं) | ,, | ,, | ,, | ४ |
| ४६. | ,, | शं | | | | ४ |
| ४७ | | (मूलं) | | | | ४ |
| ४८. | ,, | मां | ,, | ,, | ,, | ४ |
| ४९. | ,, | (मूलं) | | | | ४ |
| ५०. | ,, | नं | | | | ४ |
| ५१. | | (मूलं) | ,, | ,, | ,, | ४ |
| ५२. | ,, | यं | | | | ४ |
| ५३. | ,, | (मूलं) | | | | ४ |
| ५४. | ,, | स्वां | ,, | ,, | ,, | ४ |
| ५५. | ,, | (मूलं) | | | | ४ |
| ५६. | ,, | हां | | | | ४ |
| ५७. | | (मूलं) | ,, | ,, | ,, | ४ |
| ५८. | ,, | श्रियं | | | | ४ |
| ५९. | | (मूलं) | | | | ४ |
| ६०. | ,, | श्रीपतिं | ,, | ,, | ,, | ४ |
| ६१. | | (मूलं) | ,, | ,, | ,, | ४ |

६२. श्रीं ह्रीं क्लीं गिरिजां स्वाहा । महागणपतिं तर्पयामि ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ६३. | | (मूलं) | ,, | ,, | ,, | ४ |
| ६४. | ,, | गिरिजापतिं | ,, | ,, | ,, | ४ |
| ६५. | ,, | (मूलं) | ,, | ,, | ,, | ४ |
| ६६. | ,, | रतिं | ,, | ,, | ,, | ४ |
| ६७. | ,, | (मूलं) | ,, | ,, | ,, | ४ |
| ६८. | ,, | रतिपतिं | ,, | ,, | ,, | ४ |
| ६९. | | (मूलं) | ,, | ,, | ,, | ४ |
| ७०. | ,, | महीं | ,, | ,, | ,, | ४ |
| ७१. | | (मूलं) | ,, | ,, | ,, | ४ |
| ७२. | ,, | महीपतिं | ,, | ,, | ,, | ४ |
| ७३ | ,, | (मूलं) | ,, | ,, | ,, | ४ |
| ७४. | , | महालक्ष्मीं | ,, | ,, | ,, | ४ |
| ७५. | | (मूलं) | ,, | ,, | ,, | ४ |
| ७६. | ,, | महागणपतिं | ,, | ,, | ,, | ४ |
| ७७. | | (मूलं) | ,, | ,, | ,, | ४ |
| ७८. | ,, | ऋद्धिं | ,, | ,, | ,, | ४ |
| ७९. | | (मूलं) | ,, | ,, | ,, | ४ |
| ८०. | ,, | आमोदं | ,, | ,, | ,, | ४ |
| ८१. | , | (मूलं) | ,, | ,, | ,, | ४ |
| ८२. | | समृद्धिं | | | ,, | ४ |

| | | | | | |
|---|---|---|---|---|---|
| ८३. | (मूलं) स्वाहा । | महागणपतिं तर्पयामि । | | | ४ |
| ८४. | श्रीं ह्रीं क्लीं प्रमोदं | ,, | ,, | ,, | ४ |
| ८५. | (मूलं) | | | | ४ |
| ८६. | ,, कान्ति | | | | ४ |
| ८७. | (मूलं) | ,, | ,, | ,, | ४ |
| ८८. | ,, सुमुखं | | | | ४ |
| ८९. | (मूलं) | | | | ४ |
| ९०. | ,, मदनावतिं | ,, | ,, | ,, | ४ |
| ९१. | ,, (मूलं) | | | | ४ |
| ९२. | ,, दुर्मुखं | | | | ४ |
| ९३. | (मूलं) | ,, | ,, | ,, | ४ |
| ९४. | ,, मदद्रवां | | | | ४ |
| ९५. | ,, (मूलं) | | | | ४ |
| ९६. | ,, अविघ्नं | ,, | ,, | ,, | ४ |
| ९७ | ,, (मूलं) | | | | ४ |
| ९८. | ,, द्राविणीं | | | | ४ |
| ९९. | (मूलं) | ,, | ,, | ,, | ४ |
| १००. | ,, विघ्नहर्तारं | | | | ४ |
| १०१. | (मूलं) | | | | ४ |
| १०२. | ,, वसुधारां | ,, | ,, | ,, | ४ |
| १०३. | (मूलं) | ,, | ,, | ,, | ४ |

१०४. श्रीं ह्रीं क्लीं शङ्खनिधिं स्वाहा । महागणपतिं तर्पयामि । ४
१०५. (मूलं) ,, ,, ,, ४
१०६. ,, वसुमतिं ,, ,, ,, ४
१०७. (मूलं) ,, ,, ,, ४
१०८. ,, पद्मनिधिं ,, ,, ,, ४
१०९. (मूलं) ,, ,, ,, ४

आहत्य ४४४
तर्पणानि

हृदयाधिषढङ्गन्यासं कृत्वा महागणपतिं ध्यात्वा
पञ्चोपचारान् समर्प्य धूपदीपनैवेद्यनीराजनादि कृत्वा ।

आत्मनि उद्वासयेत् ॥

---

**प्रदक्षिणनमस्कारान् समर्पयामि । समस्तराजोपचारदेवोपचारान् समर्पयामि । अनया पूजया भगवान्सर्वदेवात्मकः श्रीमहागणपतिः सुप्रीतः सुप्रसन्नो वरदो भवतु ॥**

श्री गणेशाय नम :

## ।। गणपत्यथर्वशीर्षोपनिषत् ।।

ॐ भद्रं कर्णेभिः श्रृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु ।। ॐ शान्तिः शान्तिः शान्तिः ।।

अथ गणेशाथर्वशीर्षं व्याख्यास्यामः ।। ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम् ।। १ ।। ऋतं वच्मि। सत्यं वच्मि ।। २ ।। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात् ।। ३ ।।

त्वं वाङ्मयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि ।। ४ ।। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि

वाक्पदानि ॥ ५ ॥ त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् ॥ ६ ॥

गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः संधानम् । सꣳहिता संधिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्री छन्दः । गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥ ७ ॥ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ ८ ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९ ॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥ १० ॥

एतदथर्वशीर्षं योऽधीते । स ब्रह्मभूयाय कल्पते । स सर्वतः सुखमेधते । स सर्वविघ्नैर्न बाध्यते । स पञ्चमहापापात्प्रमुच्यते ।

सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुञ्जानो अपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षं च विन्दति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ॥ यो यदि मोहाद्दास्यति । स पापीयान् भवती । सहस्रावर्तनात् । यं यं काममधीते । तं तमनेन साधयेत् ॥ ११ ॥ अनेन गणपतिमभिषिञ्चति । स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति । स विद्यावान्भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्याचरणं विद्यात् । न बिभेति कदाचनेति ॥ १२ ॥ यो दूर्वाङ्कुरैर्यजति । स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान्भवति । स मेधावान्भवति । यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा । सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा । सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति । य एवं वेद ॥ इत्युपनिषत् ॥ १३ ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ भद्रं कर्णेभिः० ॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति गणपत्यथर्वशीर्षं समाप्तम् ॥

(पुजा आरम्भ) तत्पुरुषाय विद्महे वक्रतुण्डाय धीमही।
तन्नो दन्तिः प्रचोदयात्। इति ३ वारं अर्घ्यम
मूलेन १२ वारं श्री सिद्धलक्ष्मी समेत महाणगणातिं तर्पणं

| | | | |
|---|---|---|---|
| 2 ओं | 4 श्रीं | 6 ह्रीं | 8 क्लीं |
| 10 ग्लौं | 12 गं | 14 गं | 16 णं |
| 18 पं | 20 तं | 22 यें | 24 वं |
| 26 रं | 28 वं | 30 रं | 32 दं |
| 34 सं | 36 र्वं | 38 जं | 40 नं |
| 42 में | 44 वं | 46 शं | 48 मां |
| 50 नं | 52 यं | 54 स्वां | 56 हां |



अयं लघुग्रन्थः मम सद्गुरु पादमूले

भक्त्या समर्प्यते।

# Sri Mahaganapathy Chathuravrithy Tharpanam

In Sanskrit






Shree Gnanaprakashan
Plot No.377, Sector VI, 30th street,
K.K.Nagar, Chennai - 78. Tel. 24740001